समवायस्समवाये तदभावात् । तथा च विशेषणभावो गगनारविन्दसदृश इति, तस्माद्भावाभावौ विरुद्धाविति कथमिति चेत् । तस्मान्न प्रमाणफलयोस्सर्वथाभेदः । नापि भेदस्तयोस्सर्वथाभेदे कार्यकारणभावस्यैवासंभवात् । यदि[1] भिन्नयोरपि कार्यकारणभावस्स्यात्तर्हि भिन्नयोरपि सह्यविन्ध्ययोः कार्यकारणभावस्स्यात् । अथ समवायाभावान्न कार्यकारणभावस्तयोरिति चेत् । समवायोऽपि कुतो नेति चेत् । अवयवावयव्यादिभावाभावात्[2] अवयवावयव्यादिकाभावोऽपि कुतो न भवेत् । तथा प्रतीत्यभावात् । सापि कुतो नेति चेत् । समवायाभावात् । तथा सति चक्रकप्रसङ्गः । तथाहि— सिद्धे हि समवाये अवयवावयव्यादिभावसिद्धिः । तत्सिद्धौ समवायसिद्धिरिति ।

§२२. किंच समवायसद्भावे किं प्रमाणम् । प्रत्यक्षमिति चेत् । तदयुक्तम् । अर्थानामसाधारणस्वरूपत्वे सिद्धे सिध्येत् प्रत्यक्षता । पृथुबुध्नोदराद्याकारकघटादिवत् । न चास्य तत्सिद्धम् । तद्धि किमयुतसिद्धसंबन्धत्वं संबन्धमात्रं वा । न तावदयुतसिद्धसंबन्धत्वम् । सर्वैरप्रतीयमानत्वात् । यत्पुनः यत्स्वरूपं तत्तेन स्वरूपेण प्रतिभासते । यथा पृथुबुध्नोदराद्याकारतया घट इति । न चैकस्य सामान्यात्मकं स्वरूपं युक्तम् । समानानामभावे सामान्याभावात् । गगने गगनत्ववत् । नापि संबन्धमात्रं समवायस्यासाधारणं स्वरूपं संयोगादावपि संभवात् । ततोऽसाधारणस्वरूपासिद्धौ समवायस्य तत्सद्भावे न प्रत्यक्षं प्रमाणम् ।

§२३. इह तंतुषु पट इत्यादि प्रत्ययस्संबन्धकार्योऽबाध्यमानेह

१. यद ब । २. -व्याभावा० ब ।

प्रत्ययत्वात् । इह कुंडे दधीत्यादि प्रत्ययवदित्यनुमानं प्रमाणमिति चेन्न । हेतोराश्रयासिद्धत्वात्[१] । तदसिद्धत्वं च इह तंतुषु पट इत्यादि प्रत्ययस्य धर्मिणोऽसिद्धे । अप्रसिद्धविशेषणश्चायं हेतुः । पटे तन्तवो वृक्षे शाखा इत्यादि रूपतया प्रतीयमानप्रत्ययेन इह तन्तुषु पट इति प्रत्ययस्य बाध्यमानत्वात् । स्वरूपासिद्धश्च । तन्तुपटप्रत्यये इह प्रत्ययस्यानुभवाभावात् । पटोऽयमित्यादिस्वरूपतया हि प्रत्ययो[२]ननुभूतेऽनैकान्तिकश्च । इह [३]प्रागभावेऽनादित्वमिह प्रध्वंसाभावे प्रध्वंसाभावाभाव इति प्रत्ययात् । [४]तस्मान्न समवायसद्भावेऽनुमानं प्रमाणम् ।

§२४. किंचायं समवायः असमवायिनोस्समवायिनोर्वा परिकल्प्यते । यद्यसमवायिनोस्तर्हि घटपटयोरप्येतत्प्रसंगः । अथ समवायिनोः कुतस्तयोस्समवायित्वम्, समवायात्, स्वतो वा । समवायाच्चेत् अन्योन्याश्रयसिद्धे हि समवायत्वे तयोस्समवायः । तस्माच्च तत्त्वमिति । किंचाभिन्नं तेनानयोस्समवायित्वं विधीयते भिन्नं वा । न तावदभिन्नं तद्विधाने गगनादीनां विधानानुषंगात् । भिन्नं चेत्तयोस्तत् संबन्धित्वानुपपत्तिः । संबन्धान्तरकल्पनेऽनवस्था । तत एव तन्नियमे इतरेतराश्रयः । सिद्धे हि समवायिनोस्समवायित्वनियमे समवायनियमसिद्धिरिति । स्वत एव समवायिनोस्समवायित्वे किं समवायेन । ततो न सर्वथा प्रमाणफलयोर्भेदः । ततः प्रमाणात्फलस्य भिन्नत्वमभिन्नत्वं चोररीकर्त्तव्यम् ।

§२५. ननु कथं प्रमाणात् फलस्य भिन्नत्वमभिन्नत्वं चेति चेत् ।

---

१. -त्वाभावात् अ । २. -यानुभूते ब । ३. भावनादिकम् ब ।
४. -भावः त० ब ।

आत्मनो हि [1]पर्यायपरिच्छित्तौ साधकतमत्वेन व्याप्रियमाणं स्वरूपं प्रमाणं निर्व्यापारम्। व्यापारस्तु क्रियास्वातन्त्र्येण व्याप्रियमाणं प्रमाणता इति कथंचिद्भेदः। पूर्वपर्यायान्वितस्य प्रत्ययस्य प्रमितिविशेषणरूपतयोत्पत्तेरभेदः। अथवा ज्ञानत्वेन तयोरभेदः प्रमाणत्वेन [2]फलत्वेन भेद इति।

इति शांतिवर्णिविरचितायां प्रमेयकण्ठिकायां प्रथमस्तबकः॥

१. पदार्थ ब। २. -णत्वेन भेदः अ।

## अथ द्वितीयस्तबकः

§२६. अथ प्रमाणस्य 'प्रमाकरणं प्रमाणम्', इत्येतल्लक्षणमेवास्त्विति चेन्न, विचारासहत्वात्। तथाहि—प्रमाकरणं प्रमाणमित्यत्र का वा प्रमा यस्याः करणं प्रमाणं भवेत्। 'यथार्थानुभवः प्रमा' इति प्रमालक्षणमिति चेन्न। तत्र यथाशब्दार्थः[1] सादृश्यं ज्ञाने घटत्वादीनां तस्याभावात्। प्रमेयत्वेन सादृश्ये भ्रमेऽपि गतत्वात्। नापि 'गुणजन्यानुभवः प्रमा'। अन्योन्याश्रयात्। सिद्धे गुणे तज्जन्यानुभवः प्रमा, इति प्रमासिद्धिः। तत्सिद्धौ च गुणसिद्धिरिति। नापि 'अबाधितानुभवः[2] प्रमा', बाधस्य विपरीतप्रमात्वात्। तथा चात्माश्रयः। 'तद्वति तत्प्रकारानुभवः प्रमा,' इत्यपि न। निर्विकल्पकप्रमायामव्याप्तेः।

§२७. अस्तु तावदिदं यथाकथंचित् प्रमालक्षणम्। तथापि प्रमाकरणं प्रमाणलक्षणमिन्द्रियरूपे[3]ऽप्रमाणेऽव्याप्तम्। तेन करणेन प्रमाया अजननात्[4]। तथाहि—प्रमाकरणं प्रमाणमित्यत्र किं करणम्। साधकतमं करणम्। किं तत्साधकतमत्वम्। करणस्यातिशयितत्वम्। तदपि किं व्यापारत्वम्। तथा च सकलकरणानां क्रियाप्रसिद्धौ व्यापारवत्करणमिति व्यापारवत्त्वेन कर्त्रादीनां करणत्वं समागतमिति चेत् न, प्रमाकरिघटादौ प्रमेये[5] सति प्रमानुत्पत्तेः। न चेन्द्रिये सत्यवश्यं प्रमोत्पत्तिरिति

१. यथा **ब**। २. अविदितानुभवः **ब**। ३. प्रमाणमितिलक्षणमिन्द्रियरूपे **ब**। ४. अजनात् **अ**। ५. न, प्रमातुः प्रमेये **ब**।

तस्य करणत्वमिति वाच्यम्। सतीन्द्रिये प्रमानुत्पत्तेस्तथा च तत्र [1]तस्याव्याप्तिः।

§२८. किंचेदं लक्षणमसंभवि, लक्ष्ये सन्निकर्षादौ करणत्वासंभवात्। सम्यग्ज्ञानस्यैव करणत्वात्। किंच सन्निकर्षादिर्न करणम-साधकतमत्वात्[2]। घटवत्।

§२९. नन्विदं साधनमसिद्धम्। समनस्कादुष्टेन्द्रियार्थसन्निकर्षे सत्यविलम्बेन प्रमोत्पत्तिरिति चेन्न, समनस्कादुष्टेन्द्रियसन्नि-कर्षस्याविलम्बेन प्रमोत्पादकत्वमसिद्धमेव। आकाशे तत्स[3]-द्भावेऽपि तदभावात्।

§३०. तत्रोद्भूतरूपसहकारिणोऽभावात् सा न भवतीति चेत्तर्हि अन्धकारवति प्रदेशे विद्यमानस्य घटादेश्चाक्षुषसाक्षात्कार-स्स्यात्। तत्रोद्भूतरूपवत्त्वस्य सन्निकर्षस्य च विद्यमानत्वात्।

§३१. तत्राल्लोकाभावान्न घटादेः प्रतीतिरिति चेन्न। आलोकस्य घटादिप्रतीतावकारणत्वात्। कारणत्वे वा नक्तंचरादीनां अन्धकारे प्रतीतिर्न स्यात्। आलोकाभावात्। न चालोका-भावः पेचकादीनां चक्षुषि तेजोन्तरस्य विद्यमानत्वात्।

§३२. ननु पेचकादीनां चक्षुःस्थं तेज उद्भूतरूपमनुद्भूतरूपं वा। यद्युद्भूतरूपं तदान्धकारे पर्यटन्मार्जारादिनयनगतस्य तेजसोऽस्मदादि घटादिचाक्षुषसाक्षात्कारे कारणता स्यात्। प्रदीपादिवत्। अथानुद्भूतरूपमिति चेन्न। नयनातिरिक्तस्य तेजस उद्भूतरूपत्वात्।

१. तस्य तत्रा० ब। २. करणं साधकतमत्वाभावात् ब।
३. तद्भावे अ।

§३३. ननु यदि चाक्षुषसाक्षात्कारे आलोकस्य कारणता न स्यात्, तर्ह्यन्धकारवति गेहे घटसंशयानन्तरं तन्निश्चयार्थं प्रदीपाद्युपादानमनर्थकं स्यादिति चेन्न। प्रतिबन्धकापनयनार्थं तदुपादानमिति चेत्तर्हि तद्द्वारा तस्य तत्र कारणता स्यात्, इति चेन्न। कुड्याद्यावरणाभिघातस्य मुसलादेश्च घटचाक्षुषसाक्षात्कारे करणताप्रसंगात्। तस्मान्न तत्र यथालोकस्य कारणत्वं तथोद्भूतरूपवत्त्वसन्निकर्षयोरपि।

§३४. तथा च प्रमाकरणं प्रमाणमिति प्रमाणलक्षणमविचारितरमणीयमेव।

§३५. किंच सन्निकर्षो नाम संबन्धः। स च कथं घटते, इन्द्रियस्य मुखदेशे विद्यमानत्वात्, अर्थस्यान्यत्रविद्यमानत्वात्[1]। अथ नयनं न गोलक[2]रूपं किंतु तेजोरूपमतस्तद्रश्मीनां विषयेषु संबन्धः संपनीपद्यत इति चेत्तस्य तेजोरूपत्वे प्रमाणाभावात्। न च प्रमाणाभाव इति वाच्यम्। तस्य तेजोरूपत्वेऽनुमानस्य विद्यमानत्वात्।

§३६. तथाहि—चक्षुस्तैजसं रूपादीनां मध्ये रूपस्यैवाभिव्यंजकत्वात्, प्रदीपवत्, इति तैजसत्वसिद्धिः, इति चेन्न। हेतोस्सन्निकर्षे व्यभिचारात्।

§३७. किंच तत्तेजः किमुद्भूतरूपमनुद्भूतरूपं वा। न तावदाद्यः पक्षः। चक्षुष्यनुपलम्भात्। नापि द्वितीयः अर्थप्रकाशकत्वाभावप्रसंगात्। सर्वत्रोद्भूतरूपस्यार्थप्रकाशकत्वदर्शनात्।

१. अर्थस्यान्यत्र विद्यमानत्वात् अ प्रतौ नास्ति। २. नयनं गोलक० अ।

ततो नयनमर्थप्रकाशकं न भवत्यनुद्भूतरूपत्वात्। तप्तवारिस्थतेजोवदित्यपि न सम्यक्, हेतो सोपाधिकत्वात्। न च पक्षेतरत्वमुपाधिरिति वाच्यम्, सकलानुमानोच्छेदप्रसंगात्।

§३८. चाक्षुषज्ञानजनकत्वाभाव: उपाधिरिति चेन्न। तत्र प्रमाणाभावात्। न चायं हेतुस्सोपाधिक:। साध्यं[1] साधकत्वादित्यनुमानं प्रमाणमस्तीति वाच्यम्। हेत्वोरनुकूलत[2]र्काभावेन व्यभिचारात्।

§३९. ननु यत्रानुकूलतर्काभावस्तत्रावश्यमुपाधिरस्तीति व्यभिचार:, इति चेन्न। तत्र प्रमाणाभावात्।

§४०. किंच यत्रानुकूलतर्काभाव: तत्रोपाधेर्व्यापकत्वं वा करणत्वं वा, उपजीव्यत्वं वा। न तावदाद्य: पक्ष:। तस्य व्यापकभावे विनिगमकाभावात्। नापि द्वितीय: तृतीय:। तत[3] एव तस्माद्धेतोरप्रयोजकत्वेऽनुकूलत[4]र्काभाव: कारणं नोपाधि:, परपरिकल्पितस्तस्य तुच्छत्वात्। तथा च प्रकृतानुमानं निर्दुष्टमेव, अनुकूलतर्कस्य विद्यमानत्वादिति।

§४१. अथ 'कारकसाकल्यं प्रमाणम्' इत्यपरे। तेऽप्येवं प्रष्टव्या:, सकलानि कारणानि, साकल्यं वा तद्वैशिष्ट्यं वा। न तावदाद्य: पक्ष: सकलकारकाणां करणत्वप्रसङ्ग:। तदा स कर्त्रादिकारकव्यवहारविलोपापत्ति:। नापि तद्वैशिष्ट्यं तस्यासंभवात्। तथाहि—वैशिष्ट्यं नाम संबन्ध:। स च संयोगो वा, समवायो वा तत्स्वरूपं वा, तद्धर्मो वा। न तावत्संयोग:, आत्मन: कर्तुर्घटरूपकर्मणा संयोगाभावात्। आत्मनस्स्वशरीरे विद्यमानत्वात्। घटादेश्च दूरदेशे विद्यमानत्वात्।

१. साध्य अ। २. कर्ता अ। ३. अत एव ब। ४. कर्ता० ब।

§४२. अथ[1] आत्मनो व्यापकत्वात् संयोगस्संभवतीति चेत्तर्हि, तत्र किं प्रमाणम् । आत्मा व्यापकः नित्येन्द्रियग्राह्यविशेषगुणाश्रयत्वादाकाशवदिति चेन्न, अहमत्रास्मीति प्रत्ययेनानुमानबाधात्[2] । न चाहमत्रास्मीति प्रत्ययेनानुमानबाध इति वाच्यम् । अहमत्रास्मीति प्रत्ययस्योभयवादिसिद्धत्वात् ।

§४३. ननूभयवादिसिद्धत्वेऽप्यहमत्रास्मीति प्रत्ययो भ्रमरूप इति चेन्न । भ्रान्तित्वे बाधकाभावात् । यद्यपि नाहमत्रास्मीति प्रत्ययो नास्ति तथापि युक्तिबाधोऽस्त्येवेति चेन्न । युक्ति[3]स्तावदात्मनो व्यापकत्वसाधकानुमानम्, तत्राद्यापि विवादात् । अतस्तेन तस्य कथं बाधः ।

§४४. ननु देशान्तरगतमण्याद्यागमनं देवदत्तस्य तावदनुभवसिद्धम् । आगमनं हि कार्यम् । तच्च कारणेन विनानुपपद्यमानं सत्कारणमाक्षिपति ।

§४५. तथा च कार्यदेशे नियमेन कारणमस्तीति चेद्वाच्यम्—तर्हि कारणमदृष्टाख्यम् । अदृष्टस्य गुणरूपत्वेन गुणिनं विहाय गुणस्यावस्थानासंभवात् । अतस्तत्रापि गुण्यात्मास्त्येवेति आत्मनो व्यापकत्वसिद्धिः ।

§४६. कार्यदेशे संनिहितमेव सर्वं कारणमिति न नियमः । मन्त्रादेर्देशान्तरस्थाङ्गनाद्याकर्षणात्मकं[4] कार्यं प्रति कारणत्वेनोपालम्भात् । ततश्शरीरावच्छिन्नात्मनि प्रवर्तमानात्तादृशाददृष्टादेव देशान्तरस्थमण्याद्युपसर्पणसिद्धेर्नात्मनो व्यापकत्वमिति ।

१. अथ अ प्रतौ नास्ति । २. -मानाभावात् अ । ३. -ति युक्ति० ब । ४. -कर्षणाख्यकार्यं ब ।

§४७. किंचात्मा यदि व्यापकस्स्यात्, गमनादिमान्न स्यात् । तथा चात्माव्यापकः देशाद्देशान्तरप्राप्तेर्बाणादिवत् ।

§४८. नापि समवायः । समवायस्य पंचसु स्थलेषु संभवात् ।

§४९. नापि स्वरूपसंबन्धः । तत्र तत्स्वरूपाणां संबन्धत्वाघटनात्[1]। संबन्धो हि संबन्धिभ्यां भिन्नस्तावाश्रितश्चैकश्चेति[2] संबन्धस्य लक्षणम् । तच्च प्रकृते न संपनिपद्यते । अत[3] स्वरूपसंबन्धो गगनारविन्दरूप एवेति ।

§५०. नापि वैशिष्ट्यं धर्मः, विकल्पासहत्वात् । तथाहि—स च कारकेभ्यो भिन्नोऽभिन्नो वा । यद्यभिन्नः कारकमात्रं धर्ममात्रं वा स्यात् । यदि भिन्नस्तर्हि संबन्धासिद्धिः । न च संबन्धासिद्धिरिति वाच्यम् । संयोगादिसंबन्धस्य संभवात् ।

§५१. ननु स च संबन्धः संयोगो वा समवायो वान्यो वा । न तावदाद्यः पक्षः द्रव्ययोरेव[4] संयोगात् । नापि द्वितीयः । गुणादिव्यतिरिक्तत्वात् ।

§५२. न च वैशिष्ट्यं धर्मो गुण इति वाच्यम् । चतुर्विंशतिगुणेष्वनन्तर्भावात् । नापि तस्य कर्मत्वं तस्यानन्तर्भावात् । न च जातिः, तल्लक्षणाभावात् । नैव विशेषः । नियमेन नित्यद्रव्येष्वप्रवृत्तेः । नहि समवायः । असंबन्धरूपत्वात् । अथ स्वरूपसंबन्ध इति चेन्न । पूर्वोक्तदोषकवलितत्वात्[5] । ततो न कारकसाकल्यं प्रमाणम् ।

§५३. 'इन्द्रियप्रवृत्तिः प्रमाणम्' इति सांख्याः । तेऽपि न परीक्षकाः

---

१. -त्वघटनात् ब । २. -तावा ब । ३. तत् ब । ४. -योरसं० अ । ५. कवलिक० अ ।

विचारानभिमुखत्वात् । तथा हि—इन्द्रियस्य विषयेषु प्रवृत्तिर्हीन्द्रियवृत्तिः, संबन्ध इति यावत् । स च न संभवति । तयोर्भिन्नदेशप्रवृत्तित्वात् ।

§५४. किं च इन्द्रियेभ्यो वृत्तिर्व्यतिरिक्ता वाव्यतिरिक्ता वा घटते । तेभ्यो यद्यभिन्ना तदा श्रोत्रादिमात्रमेव[1] सा । तच्च सुप्ताद्यवस्थायामप्यस्तीति तदाप्यर्थपरिछित्तिप्रसक्तेस्सुप्तादिव्यवहारोच्छेदः । अथ व्यतिरिक्तासौ तर्हि तस्येयमिति व्यपदेशासिद्धिः ।

§५५. न च[2] संबन्धात्तस्येयमिति व्यपदेशः सिध्यतीति वाच्यम् । कोऽसौ संबन्धः संयोगस्समवायो वा । न तावत्संयोगः । प्रवृत्तेरद्रव्यत्वात् । नापि समवायः । गुणगुणिनोरत्यन्तं भिन्नयोस्समवायासंभवात् ।

§५६. किं च वीणानादाकर्णनव्यासक्तस्य पुरुषस्य रूपादिविषये चक्षुषः प्रवृत्तावपि रूपादिप्रत्ययानुत्पत्तेर्नेन्द्रियवृत्तिः प्रमाणम् ।

§५७. 'अर्थतथात्वप्रकाशको ज्ञातृव्यापारः प्रमाणम्', इति प्रभाकरमतम् । तदपि न, विचाराक्षमत्वात् । तथा हि—ज्ञातृव्यापारः किं ज्ञानरूपोऽज्ञानरूपो वा । न तावदाद्यः पक्षोऽनङ्गीकारात् । अज्ञानरूपस्सः प्रवृत्तिरूपो वान्यो वा । न प्रवृत्तिरूपस्तस्यार्थप्रकाशकताऽघटनात् । घटने वान्धकारवति प्रदेशे प्रवर्तमानस्यार्थप्रतिपत्तिः स्यात् । नान्योऽनिर्वचनात् ।

§५८. अथ जानातीति क्रिया ज्ञातृ[3]व्यापार इत्यभिधीयते । स

१. श्रोत्रादिमात्रांदिमात्रेवासां ब । २. न च न संब० ब ।

३. ज्ञातृत्वव्यापारः ब ।

च बोधरूपो वाबोधरूपो वा। बोधरूपत्वे प्रमातृवत्प्रमाणान्तरगम्यता न स्यात्। अबोधरूपता तु व्यापकस्यायुक्ता। चिद्रूपस्य ज्ञातुरचिद्रूपस्य व्यापारायोगात्। तथा च न[1] च ज्ञानरूप एव युक्तः।

§५९. किं चासौ ज्ञातृव्यापारो नित्योऽनित्यो वा। न तावन्नित्यः। अन्धादीनामप्यर्थदर्शनप्रसङ्गात्। सुप्तादिव्यवहाराभावः। सर्वस्य सर्वज्ञत्वप्रसंगः। कारणान्वेषणवैयर्थ्यं[2] च स्यात्। अथानित्यस्सोऽप्यजन्यो जन्यो वा। न तावदजन्यः प्रागभाववत्। अनादित्वप्रसंगात्।

§६०. न[3] च व्यापारस्य कारकजन्यत्वमुररीक्रियत इति वाच्यम्। अनवस्थानात्। तथा हि—व्यापारजनने प्रवर्तमानानि कारकाणि[4] व्यापारान्तरसापेक्षाणि न वा। तत्राद्यपक्षेऽनवस्था, व्यापारान्तरसापेक्षैस्तैर्जननात्। व्यापारान्तरनिरपेक्षाणां तज्जनकत्वे फलजनकत्वमेवास्तु किमदृष्टव्यापारपरिकल्पनाप्रयासेन।

§६१. व्या[5]पारस्तथापि प्रकृतकार्यः। असौ व्यापारान्तरसापेक्षो न वा। न तावत्सापेक्षः। अपरापरव्यापारांतरापेक्षायामेवोपक्षीण[6]शक्तिकत्वेन प्रकृतकार्यजनकत्वाभावप्रसंगात्। व्यापारान्तरनिरपेक्षस्य तज्जनकत्वे कारका[7]णामपि तथा तदस्तु, विशेषाभावात्।

§६२. किं च ज्ञातृव्यापारः किमात्मनो भिन्नो वाभिन्नो वा।

१. स च अ। २. कारकान्वे० ब। ३. स च अ। ४. कारणानि ब। ५. -यासेन वा व्या० अ। ६. -क्षेणशक्ति० अ। ७. कार्यकारणमपि अ।

भिन्नश्चेत्तस्येति व्यपदेशासिद्धिः। अभिन्नश्चेत्तादात्म्येन[१] व्यापारेणोक्तः स्यात्। ततो न प्रमाणमर्थतथात्वप्रकाशको ज्ञातृव्यापारः इति।

§६३. 'अनधिगतार्थाधिगंतृत्वं प्रमाणम्,' इति भाट्टमते प्रमाण-लक्षणम्। तन्न। स्मृतेरप्रामाण्यप्रसङ्गात्। इष्टापत्तिरिति चेन्न। स्मृतिप्रामाण्यस्य पूर्वं व्यवस्थापितत्वात्।

§६४. किं चेदं लक्षणमव्याप्तम्। उपमाने[२] प्रमाणेऽनधिगतार्थाधिगंतृ-त्वाभावात्। न च संशयातिरिक्तमिदं लक्षणमिति वाच्यम्। संशयस्याधिगतार्थाधिगंतृत्वात्।

§६५. ननु संशयविषयः एको वा द्वयं वा। तच्च तत्र पूर्वं यद्यवगतं तदा विशेवत्तयावगतं न वा। न तावदाद्यः पक्षः। निश्चिते संशयायोगात्। नापि द्वितीयः। संशयादावतिव्याप्तेः। अथ[३] एकत्र वक्रकोटरादिमत्तया स्थाणुर्ज्ञातः। अपरत्र शिरः-पाण्यादिमत्तया पुरुषो ज्ञातः। तत्र स्थाणौ पुरुषे वा समवा-यान्तरविशेषापरिज्ञानदशायां संशयः संभवति।

§६६. तथा च नातिव्याप्तिः। अधिगतार्थाधिगंतृत्वात्। न च प्राथमिकघटज्ञानातिरिक्तघटज्ञानं प्रमाणं न स्यात्। अधि-गतार्थाधिगंतृत्वादिति वाच्यम्। समयभेदादर्थभेदसिद्धेः[४]। प्रकृतेऽपि समयभेदाद्विषयभेदस्य संभवादतिव्याप्तिः तत्र तदवस्थैव। ततोऽनधिगतार्थाधिगंतृ प्रमाणमिति मंदमेव।

§६७. अविसंवादिज्ञानं सौगतीयं प्रमाणम्। तदपि न। परप्रति-

१. तादात्म्यैव अ। २. उपमानप्र० अ। ३. -प्तेः एकत्र अ।
४. -दघटभेदात्सिद्धे अ।

पादितद्दूषणगणप्रसंगात् । तथा हि—अविसंवादित्वं ज्ञाने ह्युत्तरकाले ज्ञानान्तरेणाबाध्यत्वम् । तस्य कदाचिद्भ्रमेऽपि संभवात् । तत्रापि प्रामाण्यप्रसङ्गात् ।

§६८. किं चाविसंवादित्वं विसंवादित्वाभावः । विसंवादित्वं बाध्यत्वम् । तच्च सतो न संभवति । स्थितिक्षणस्य त्वयानङ्गीकारात् । नाप्यसतोऽसंभवात् । तथा चाप्रसिद्धस्य विसंवादित्वस्याभावः कथं निरूपणीयोऽतिप्रसङ्गात् । ततोऽविसंवादिविज्ञानं प्रमाणमिति प्रमाणलक्षणमविचारितरमणीयमेव ।

इति शांतिवर्णिविरचिताया प्रमेयकण्ठिकायां द्वितीयस्तवकः ।

## अथ तृतीयस्तबकः

§६९. अथ ज्ञप्तौ तत्प्रमाणस्य प्रामाण्यं स्वतः परतश्च, सर्वथा प्रामाण्यस्य स्वतस्त्वपरतस्त्वयोर्बाधकसद्भावात्। तथाहि—प्रमाणस्य प्रामाण्यं स्वाश्रयग्राहकग्राह्यमिति मीमांसकाः। तत्र प्रामाण्यं स्वाश्रयग्राहकेणानुमानेन गृह्यत इति भाट्टाः। स्वाश्रयग्राहकेण स्वेन गृह्यत इति प्राभाकराः। स्वाश्रयग्राहकेणाव्यवसायेन[1] गृह्यत इति मुरारिमिश्राः।

§७०. तथा च प्रयोगः—ज्ञानप्रामाण्यं स्वाश्रयग्राहकग्राह्यं भवितुमर्हति। अबाधितप्रत्ययधर्मत्वात्। यथा ज्ञानत्वमिति मीमांसकत्रितयसाधारणानुमानात् प्रामाण्यस्य स्वतस्त्वसिद्धिः।

§७१. यदि प्रामाण्यं परतो ज्ञायते, तदनुमापकलिङ्गपक्षव्याप्त्यादिज्ञानेषु स्वस्वविषयनिश्चयार्थं प्रामाण्यस्य [2]परतो ज्ञेयत्वे फलमुखी कारणमुखी चानवस्था स्यादिति न प्रमाणं परतो ज्ञायते, इति परिशेषादपि स्वतः प्रामाण्यग्रहः।

§७२. ननु प्रामाण्यस्य स्वतो ग्रहेऽनभ्यासदशोत्पन्नज्ञाने तत्संशयो न स्यात्। ज्ञानग्रहे प्रामाण्यनिश्चयात्। अनिश्चये[3] वा न स्वतःप्रामाण्यग्रह इति चेत्, पीतश्शंखः, आदर्शे मुखमित्यादि

१. अनुव्यवसायेन ब। २. ज्ञायत्वे ब। ३. अनिश्चयो ब।

भ्रमो विशेषदर्शनेऽपि यथा दोषान्तराज्जायते[१]। तथा निश्चिते प्रामाण्ये दोषान्तरात्तत्संशय इति चेत्, न, तद्वदेवात्रापि प्रवृत्तिप्रसङ्गात्। साक्षात्कारविशेषदर्शनं साक्षात्कारी भ्रमविरोधिदिङ्मोहादौ तथादर्शनात्। तच्च न पित्तादिना[२] न प्रतिबन्धात्। न च जात्या कश्चिद्दोषः। न च प्रामाण्यसंशयाद्विषये संशयवत् प्रामाण्यज्ञाने प्रामाण्यसंशय इति वाच्यम्। प्रामाण्यज्ञानेऽपि स्वतः प्रामाण्यग्रहे संशयानुपपत्तेः। त[३]स्मादनभ्यासदशापन्नज्ञाने प्रामाण्यं परतो ज्ञायते। सांशयिकत्वादप्रामाण्यवत्। ततो न सर्वथा प्रामाण्यस्य स्वतस्त्वं सिद्धम्।

§७३. परतस्त्वं तु प्रामाण्यस्य ज्ञानग्राहकातिरिक्तग्राह्यत्वम्। ज्ञानं मनसा ग्राह्यम्। तद्गतं प्रामाण्यं पुनरनुमानग्राह्यमिति नैयायिकाः। तथा च प्रयोगः—इदं जलज्ञानं प्रमाणम्। समर्थप्रवृत्तिजनकत्वात्। यन्नैवं तन्नैवं यथाऽप्रमाणम्, इत्यस्मादनुमानात्परतस्त्वसिद्धिः।

§७४. ननु गृहीतप्रामाण्यं ज्ञानम्। न परप्रामाण्यं निश्चयरूपम्। अनवस्थावतारात्। नापि[४] ज्ञायमानप्रामाण्यं स्वतः प्रामाण्यग्रहापत्तेरतो गृहीतप्रामाण्यमेव ज्ञानम्। परप्रामाण्यनिश्चयरूपमास्थेयम्। तथा सति [५]व्यवसायोपगृहीतप्रामाण्य एव स्वविषयं निश्चाययतु। किं विषयनिश्चयार्थं तत्प्रामाण्यग्रहेण।

§७५. अथ व्यवसायस्याप्रामाण्यदर्शनान्न तन्मात्रादर्थनिश्चयस्तर्हि

१. ज्ञायते अ। २. पित्तादीनां ननु प्रति० ब। ३. कस्माद० अ। ४. ज्ञानमनुमानप्रामाण्यं ज्ञानं स्वतः ब। ५. तदाव्यवसायाद्यगृहीत० ब।

[१]प्रामाण्यानुमितेरप्यप्रामाण्यदर्शनान्न भवतोऽपि प्रामाण्यनिश्चय इति चेन्न ब्रूमो ज्ञानप्रामाण्यनिश्चयादेवार्थनिश्चय इति। किंतु [२]यत्राप्रामाणता नास्ति स्वग्रामतटाको[३]दिज्ञानेषु व्यवसाय एवार्थनिश्चय इति। तत एव प्रवृत्तिर्निष्कंपा भवेत्। साधूक्तम्। तत्राप्रामाण्यशंका कुतो न भवेत्। प्रामाण्यस्य निश्चितत्वात्। तत्र प्रामाण्यनिश्चयः परतो वा स्वतो वा स्यात्। न च परतः प्रामाण्यशंकाभावात्। **"यावदाशंकं प्रामाण्यानुस्मरणम्[४]"** [] इत्युक्तत्वात्। नापि स्वतः, अपसिद्धान्तापातात्। तस्मान्न सर्वथा प्रामाण्यस्य स्वतस्त्वं परतस्त्वं वा सिद्धम्। किं तर्हि, अभ्यासदशायां स्वतस्त्वमनभ्यासदशायां परतस्त्वं प्रामाण्यस्योररीकर्त्तव्यम्।

§७६. ननु परतस्त्वे प्रामाण्यस्यानवस्थाप्रसंग इति चेन्न। विषयान्तरसंचारात्। स्वयं सिद्धप्रामाण्याद्वेदनात्पूर्व[५]स्य तथाभावसिद्धश्चेति प्रामाण्यज्ञप्तिवादः।

§७७. अथोत्पद्यते प्रमा[६] परत एव न तु स्वतो विज्ञानसामग्रीमात्रात्। तथाहि—अनित्या प्रमा प्रमाकरणविजातीयकारणजन्या। प्रमाविजातीयकार्यत्वाद् घटवदिति प्रमायाः परतस्त्वसिद्धिरिति चेन्न। दोषाभावेन सिद्धसाधनात्। तथा चानित्या प्रमा आगंतुक[७]भावसापेक्षज्ञानसामग्रीजन्या न [८]प्रामाण्यत्वात्, घटवत्।

§७८. ननु लाघवतर्कसहकारिणा(णो)भावरूपमेव प्रमायाः कारण-

१. अनुमिति ब। २. यत्र प्रामा० ब। ३. तटी० ब। ४. प्रामाण्यानुसरणम् ब। ५. वेदनापूर्व० ब। ६. प्रमाणं परतः अ। ७. आगंतुके ब। ८. न अप्रामा० अ।

मनुमितिर्विषयीकरोति। न त्वभावात्मकदोषाभावरूपं कारणं गौरवात्। तस्मात्प्रमां प्रति गुणो हेतुरप्रमां प्रति दोषो हेतुः। अन्यथाप्रमां प्रति गुणाभाव एव हेतुः स्याद्दोषोऽपि तत्र निदानं न भवेत्। विनिगमकाभावात्। [1]तस्मादनित्य-प्रमेत्यादिसाधनमप्रयोजकम्। अनुकूलतर्काभावात्।

§७९. अथ प्रमां भ्रमं च[2] कुर्वंती ज्ञानहेतुस्तोमे[3] किं मंडूकवशांजन-दोषाध्वंशोरगभ्रमः। तदभावात्प्रमेत्यन्वयव्यतिरेकाभ्यां भ्रमं प्रति दोषस्य कारणताकल्पनात्। तदभाव एव प्रमां प्रति कारणं कल्प्यते। न त्वतिरिक्तो गुणः, गौरवात्। तथा च सिद्धसाधनं तदवस्थमेव। अत एव न प्रतिबंधिरपि दोष-स्यान्वयव्यतिरेकाभ्यां कारणताकल्पनात्। साधनं तु नाप्रयोजकं साधनस्य साध्यव्याप्यत्वात्।

§८०. ननु विशेषज्ञानलक्षणगुणाभावे सति न संशय-विपर्ययोत्तर-प्रत्यक्षप्रमा। तस्मिन् सति सा इत्यन्वयव्यतिरेकाभ्यां तां प्रत्यपि तस्य कारणत्वं गृहीतम्। अतः क्वार्थांतरम्। मीमांसकीयसाधने चाप्रयोजकत्वं तदवस्थमेव। साध्य-साधनयोर्व्याप्तेरभावात्!

§८१. ननु शाब्दप्रमां प्रति भ्रमप्रमादविप्रलिप्सा[5]करणा-पाटवात्मकदोषचतुष्टयाभावस्य कारणत्वं क्लृप्तम्। तथा सर्वत्रापि दोषाभावस्य कारणत्वं युक्तम्। अथ शाब्दप्रमां प्रत्यपि यथार्थवाक्यार्थज्ञानस्यैव गुणस्य कारणता क्लृप्त-दोषचतुष्टयाभावापेक्षया तस्य लघुत्वात्। इत्युत्पत्तौ प्रमायाः परतस्त्वसिद्धिरिति प्रामाणोत्पत्तिवादः।

---

१. -प्रमात्वादिदम् साधनम् ब। २. चाकुर्वति ब। ३. तो- मं- ब। ४. -दोषांकोरग० ब। ५. रिप्सा अ।

§८२. अथ किं तत्प्रामाण्यस्य लक्षणाम्, सत्यत्वमिति चेन्न। घटादि-साधारण्यात्। सुनिश्चितासंभवद्बाधकज्ञानत्वं प्रामाण्य-लक्षणमिति चेन्न। धारावाहिकज्ञानेऽतिव्याप्तिरिति चेन्न। गृहीतग्राहिज्ञानस्यापि बाधकसद्भावात्। तथाहि—गृहीत-ग्राहिधारावाहिज्ञानमप्रमाणम्। गृहीतग्राहिप्रत्ययत्वात्। यन्नैवं तन्नैवम्। यथा प्रमाणम्। ततस्तत्र तल्लक्षणं नाति-व्याप्तम्। इति सुनिश्चितासंभवद्बाधकज्ञानत्वं वा स्वापूर्वार्थ-व्यवसायायात्मकज्ञानत्वं वा प्रामाण्यस्य लक्षणम्।

§८३. अन्ये तु तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यलक्षणमाचक्षते। तदविचारितरमणीयमिति सर्वं सुस्थम्॥

इति शांतिवर्णिविरचितायां प्रमेयकण्ठिकायां तृतीयस्तबकः।

## अथ चतुर्थस्तबकः

§८४. अथ तत्प्रमाणस्य सप्तभंग्यात्मकः पदार्थो विषयः। तथा-प्रतीतेः। नन्वेकान्ततस्तत् सर्वं भावरूपमिति चेन्न। सर्वस्य सर्वात्मकत्वप्रसङ्गात्। न च तद्धर्मस्यासाधारणस्य विद्य-मानत्वान्न सर्वस्य सर्वात्मकत्वमिति वाच्यम्। असाधारण-धर्मस्य साधारणधर्माभावरूपत्वात्। तथा चासाधारण-मिच्छता भावैकान्तवादिनाप्यवश्यमभावोऽङ्गीकर्त्तव्यः। तत-स्स्यादस्तीति वक्तव्यम्।

§८५. अथ सर्वथाभावरूपमेव जगदिति चेन्न। घटस्सन् पटस्सन्निति सद्ग्राहकस्य[1] प्रत्यक्षप्रमाणस्य सद्भावात्सर्वथाभाव इत्यत्र प्रमाणाभावाच्च। ततस्स्यान्नास्तीति वक्तव्यम्।

§८६. तथा न[2] सर्वथा भावाभावात्मकश्च पदार्थस्तदंशेन[3] जात्यंतरस्यापि प्रतीतेः पानकवत्। ततस्स्यादस्तिनास्तीति वक्तव्यम्।

§८६. ननु मास्तु सर्वथास्तित्वं नास्तित्वं तदुभयं वा। अनेकदोष-कवलितत्वात्। किंतु सर्वथा सर्वमवाच्यमिति चेन्न। सर्वथा वस्तुनोऽवाच्यत्वेऽवाच्यमित्युक्तेरसंभवात्। किंचानभिला-प्यत्वे वस्तुनः केवलं जगता मूकत्वं स्याद्विधिप्रतिषेध-व्यवहारायोगात्। ततः स्यादवक्तव्यमिति वक्तव्यम्।

---

१. तद्ग्राहक० ब। २. तथा सर्वथा अ। ३. तदक्षिनो ब।

§८८. अथेदं सदिति सर्वं सामान्यरूपमिति चेन्न। तस्यावक्तव्यत्वात्। तत्र प्रमाणाभावाच्च। ततस्सदवक्तव्यमेवेति वक्तव्यम्।

§८९. ननु मा भवतु सत्तासामान्यं अन्यापोहरूपत्वं सामान्यं भवत्विति चेन्न। तस्याप्यवक्तव्यत्वात्। तस्य व्यावृत्तिरूपत्वेन सामान्यरूपताघटनाच्च। ततोऽसदवक्तव्यमिति वक्तव्यम्।

§९०. अथ सामान्यविशेषौ परस्परमत्यन्तभिन्नौ स्यातामिति चेन्न। तयोरप्यवक्तव्यत्वात्। सर्वथा सामान्यविशेषयोर्भिन्नयोः प्रमाणबाधितत्वाच्च। ततस्सदसदवक्तव्यमेवेति वक्तव्यम्। परमतापेक्षया त्वेवं भंगानामुद्देशः।

§९१. स्वमतापेक्षया त्वेवमुद्देशः। तथाहि—एकस्मिन्वस्तुनि स्यात्सत्त्वं स्वरूपादिचतुष्टयापेक्षया। स्यादसत्त्वं पररूपादिचतुष्टयापेक्षया। स्यात्सदसत्त्वं स्वपररूपादिचतुष्टयापेक्षया। स्यादवक्तव्यत्वं स्वपररूपादिचतुष्टयापेक्षया सह वक्तुमशक्तेः। स्यात्सदवक्तव्यत्वं स्वरूपादिचतुष्टयापेक्षत्वे सति सह वक्तुमशक्तेः। स्यादसदवक्तव्यत्वं पररूपादिचतुष्टयापेक्षत्वे सति सह वक्तुमशक्तेः। स्यात्सदसदवक्तव्यत्वं स्वपररूपादिचतुष्टयापेक्षत्वे सति सह वक्तुमशक्तेरिति भंगसप्तकमुपपन्नम्।

§९२. ननु सत्त्वासत्त्वयो[1]र्विरुद्धधर्मयोः कथमेकत्रावस्थितिरिति चेन्न। तयोरविरुद्धत्वात्। तथाहि—विरोधो ह्यनुपलंभसाध्यः। स च प्रकृते न संभवति। तयोरेकत्र प्रतीतेः।

---

१. सत्वासत्वं ब।

§९३. ननु घटस्सन् पटस्सन्निति घटादौ सत्त्वमेव प्रतीयते, नत्व-सत्त्वमिति चेन्न। गौणतयाऽसत्त्वस्यापि प्रतीतेः। किंच विरोधः किं सहानवस्थानलक्षणो वा परस्परपरिहारस्थिति-लक्षणो वा वध्यघातकभावो वा। न तावदाद्यः पक्षः सत्त्वा-सत्त्वयोरेकत्रोपलब्धेः। द्वितीयस्तु संभवतोस्सत्त्वासत्त्वयोरेव स्यात्। एकत्र मातुर्लिंगे रूपरसयोरिव। नापि तृतीयः। तयोस्समानबलत्वात्। किंचैकावच्छेदेनापि घटतदभाव-योरेकत्राविरोधेनावस्थितेः परैरप्यङ्गीकृतत्वात् कथं विरोधा-ख्यं दूषणं वरीवर्तीति तयोर्न विरोधः।

§९४. ननु मा भवतु विरोधः संशयादिलक्षणं तु सं संपनिपद्यते दूष-णम्। तथाहि—केन खलु स्वरूपेण घटादीनां सत्त्वं केन चासत्त्वमिति संशयः। तथा सत्त्वस्यान्यदधिकरणम्। असत्त्व-स्यान्यदधिकरणमिति वैयधिकरण्यम्। तथा येन स्वभावे-नार्थस्य सत्त्वस्वभावत्वं तेनासत्त्वस्वभावस्याप्रसंगः। येनास-त्त्वस्वभावत्वं तेन सत्त्वस्वभावस्यापि, इति संकरः "**सर्वेषां युगपत्प्राप्तिः संकरः**" [ ] इत्यभिधानात्। तथा येन स्वभावेन वस्तुनस्सत्त्वं तेनासत्त्वं प्राप्नोति। येन चासत्त्वं तेन सत्त्वमिति व्यतिकरः। "**परस्परं विषयगमनं व्यति-करः**" [ ], इति प्रसिद्धेः। तथा येन रूपेण सत्त्वं तेन कथंचिदसत्त्वम्। येन चासत्त्वं तेनापि कथंचित्सत्त्वमित्यन-वस्था। अतोऽप्रतिपत्तिस्ततोऽभाव इति। तत्र न तावत्संशयः। वस्तुनो भेदाभेदात्मकत्वे प्रमाणसिद्धे संशयस्यासंभवात्। सत्त्वासत्त्वाप्रतीतौ हि संशयो युक्तः। क्वचित्स्थाणुत्वपुरुषत्वा-प्रतीतौ। कथमसौ चलिता[1] प्रतिपत्तिः संशयः। न चेयं प्रतिपत्तिः तथा। नापि वैयधिकरण्यम्। निर्बाधबोधे

१. चरिता ब।

सत्त्वासत्त्वयोरेकाधारतया प्रतीयमानत्वात्। न च संकर-व्यतिकरौ स्वरूपेणैवार्थे तयोः प्रतीतेः। नाप्यनवस्था धर्मिणो[1] ह्येकरूपत्वं न धर्माणां, ततः कथमनवस्था। अभावदोषस्तु दूरोत्सारित एवाशेषप्राणिनामनेकान्तात्मकार्थ-स्यानुभवसंभवात्। एवं स्यादेकं द्रव्यापेक्षया, स्यादनेकं पर्यायापेक्षया इत्यादि योज्यम्।

§९५. अथैकत्वानेकत्वयोर्विरोधात्कथमेकस्यैकत्वानेकत्वमिति चेन्न। प्रतीयमानयोस्तयोर्विरोधासंभवात्।

§९६. ननु न प्रतीयते विरोधात्तदिति चेन्न। विरोधस्यानुपलंभ-साध्यत्वात्। प्रकृते तु अनुपलंभाभावाद्विरोधो नास्ति। येन विरोधान्न प्रतीयत इति वक्तुमुद्यतोऽसि।

§९७. किंच कुंभोऽयमिति कुंभज्ञानं कुंभांशे सप्रकारकं कुंभत्वांशे निष्प्रकारकमित्येकज्ञाने सप्रकारकनिष्प्रकारकत्वयोः परै-रप्यङ्गीकृतत्वात् कुतो विरोधोऽवतिष्ठते। ततो न विरोधः। संशयादिदोषपरिहारः पूर्ववदेव। एवं सर्वं स्यान्नित्यं द्रव्यापेक्षया, स्यादनित्यं पर्यायापेक्षया इत्यादि योज्यम्।

§९८. नन्वात्मनः कथं नित्यत्वं नित्यत्वे प्रमाणासद्भावात्। तद्धि प्रत्यक्षं वानुमानं वा। न तावदाद्यः पक्षः। तस्य नीरूपत्वात्। मनसा ग्राह्यत्वेऽपि तन्नित्यत्वाग्रहात्। आत्मा नित्यः, निरंशत्वात् गगनवदित्यनुमानं प्रमाणमिति चेन्न। पाकज-रूपेण व्यभिचारात्। दत्तेऽपि रूपव्यतिरिक्तत्वे सतीति विशेषणे कर्मणा व्यभिचारस्तदवस्थ एव। अथ निरंश[2]द्रव्य-त्वमेव साधनमिति चेन्न। विशेषणासिद्धत्वात्।

---

१. धर्मिण्यो ब। २. निरंशेतरद्र० ब।

§९९. नन्वात्मा[1] निरंशः, नित्यत्वादित्यनुमानान्निरंशत्वसिद्धिरिति चेन्न। सर्वथा नित्यत्वस्य स्वरूपासिद्धत्वात्। नित्यत्वे सिद्धे तस्य निरंशत्वसिद्धिः निरंशत्वे सिद्धे नित्यत्वसिद्धिरित्यन्यान्याश्रयाच्च।

§१००. किंच[2] कुंडली दंडी नेत्यत्र विशिष्टाभावः प्रतीयते। [3]विशिष्टत्वं च विशेषणविशेष्यतदुभयसंबन्धातिरिक्तं नास्ति। तथा च विशेषणाभाववद्विशेष्यस्याप्यभावः सिद्धस्तदा विशेष्यो नित्य एव। य एव दंडविशिष्ट आसीत्स एवेदानीं कुंडलविशिष्टो दृश्यत इति प्रत्यभिज्ञानबलान्नित्यो विशेष्यपदार्थ इति नित्या[4]नित्यत्वमेकस्य परैरंगीकर्त्तव्यम्। तथा च प्रयोगः—आत्मा नित्यानित्यात्मकस्सत्त्वात्। यन्नैवं तन्नैवम्। यथा गगनकोकनदमिति।

§१०१. नन्वेकस्य नित्यानित्यत्वे विरोधादिदूषणमिति चेन्न। विरोधादेः पूर्ववत्परिहर्तव्यत्वात्। ततो न विरोधादिदूषणम्। एवं सामान्यविशेषात्मकं सकलं परैरभ्युपगंतव्यम्। घटत्ववत्, ततो न विरोधादिदूषणावकाशः।

§१०२. ननु वस्तुन्यनेकांतात्मकत्वस्यासंभवः, प्रमाणाभावादिति चेन्न। सर्वमनेकांतात्मकं तत्त्वात्, इत्यनुमानादनेकांतात्वकत्वस्य सिद्धेः।

§१०३. अथ सप्तभंगी प्रमाणं वा प्रमाणविषयो वा। न तावदाद्यः पक्षः। घटादेरपि प्रमाणत्वं स्यात्तस्य सप्तभंगात्मकत्वात्।

---

१. नत्वा ब। २. च कुंडलौ अ। ३. -शिष्टं ब। ४. नित्व एव दंड० ब।

द्वितीयपक्षे तु प्रमाणस्यापि प्रमेयत्वं स्यात्तस्यापि सप्तभंगात्मकत्वात्।

§१०४. ननु प्रमाणस्य प्रमेयत्वं स्यादिति यदुक्तं तदिष्टमेव तुलायां[1] प्रमाणप्रमेयव्यवहारादिति।

तिर्वणिविरचितायां प्रमेयकंठिकायां चतुर्थस्तबकः।

---

१. कुलायां अ।

## अथ पंचमस्तबकः

§१०५. अनेकान्तात्मकं वस्तु सर्वं साक्षात्कुर्वन्नेव सर्वज्ञो नेश्वरः। तत्र प्रमाणाभावात्।

§१०६. ननु क्षित्यादिकम्[1]उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यं कार्यत्वात्। यद्यत्कार्यं तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यम्। यथा कुंभादिकार्यम्। कार्यं चेदं क्षित्यादिकम्। तस्मादुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यम्। न च कार्यत्वमसिद्धम्। तथाहि—क्षित्यादिकं कार्यम्। सावयवत्वात्। यत्सावयवं तत्कार्यम्। यथा हर्म्यादि। सावयवं चेदम्। तस्मात्कार्यम्।

§१०७. ननु सावयवत्वात्कार्यत्वं क्षित्यादेः प्रसाध्यते। तत्र किमिदं सावयवत्वं नाम सहावयवैर्वर्तमानत्वं, तैर्जन्यमानत्वं वा, सावयवमिति बुद्धिविषयत्वं वा। प्रथमपक्षे सामान्यादिना अनेकान्तो गोत्वादिसामान्यं हि सहावयवैर्वर्तते। न च कार्यम्। द्वितीयपक्षेऽप्यसिद्धो हेतुः। परमाण्वाद्यवयवानां प्रत्यक्षतोऽसिद्धौ क्षित्यादेस्तज्जन्यमानत्वस्याप्यसिद्धेः। प्रत्यक्षानुपलंभसाधनश्च कार्यकारणभावः द्व्यणुकं स्वपरिमाणादल्पपरिमाणोपेतकारणारब्धं कार्यत्वाद् घटवदित्यनुमानात्तत्प्रसिद्धिरित्यप्यसंगतम्। चक्रकप्रसंगात्। परमाणुप्रसिद्धौ हि क्षित्यादेर्जन्यमानत्वलक्षणसावयवत्व-

---

१. क्षित्यादिकं कार्यभेदं क्षित्यादिकं तस्मादुपादान० ब।

सिद्धिः। तत्सिद्धौ हि परमाणुप्रसिद्धिरिति महापरिमाणोप्रेतप्रशिथिलावयवकार्पासपिंडोपादानेनातिनिबिडावयवाल्पपरिमाणोपेतकार्पासपिंडेनानेकांतश्च । बलवत्पुरुषप्रयत्नप्रेरितहस्ताद्यभिघातादवयवक्रियोत्पत्तिरवयवविभागात्पूर्वसंयोगविनाशान्महाकार्पासपिंडविनाशोऽल्पकार्पासपिंडोत्पादस्तु स्वारंभकावयवकर्मसंयोगविशेषवशादेव भवतीत्यपि विनाशोत्पादप्रक्रियोद्घोषणमात्रं प्रमाणतोऽप्रतीतेः। कार्पासद्रव्यं हि महापरिमाणपिंडाकारपरित्यागेनाल्पपरिमाणपिंडाकारतयोत्पद्यमानं प्रमाणतः प्रतीयते। आशूत्पत्तेर्भेदानवधारणात्तथाप्रतीतिरित्यसंगतम्। सकलभावानां क्षणिकत्वानुषंगात्[1]। सावयवमिति बुद्धिविषयत्वमप्यात्मादिनानैकांतिकम्। तस्याकार्यत्वेऽपि तत्प्रसिद्धेः। सावयवार्थसंयोगान्निरवयवत्वेऽप्यस्य तद्बुद्धिविषयत्वमित्यौपचारिकं चेत्तदसमंजसम्। तस्य निरवयत्वे व्यापित्वविरोधात्। परमाणुवत्। तदपि ह्यौपचारिकमेव स्यात्। तदेवं सावयवत्वसिद्धेः। कथं क्षित्यादेः कार्यत्वसिद्धिः।

§१०८. किंच पक्षतावच्छेदकं क्षित्यादिकमन्यद्वा। नाद्यः। क्षितित्वांकुरत्वाम्बोधित्वादिपक्षतावच्छेदकनि[2]रूपकनि[3]रूपणेनैव पुरुषायुषो गतत्वात्पक्षतावच्छेदकधर्माणामनन्तत्वात्। अथवा क्षितित्वादिकस्य न पक्षतावच्छेदकत्वमनुगतत्वात्। नापि द्वितीयः। तस्यासंभवात्। न च साध्यमप्युपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमतास्मदादिनासिद्धसाधनात्[4]।

---

१. -कत्वानुप्रसंगात् अ। २. पक्षतानिरूपक- ब। ३. -कानिरूपेण- अ। ४. साधनानि अ।

§१०९. किंचैवं निरुपादानस्य ध्वंसस्य कथं सकर्तृकत्वं स्यादतीन्द्रियोपादानस्य शब्दस्य कथमस्मदादिकर्तृकता स्यादुपादानादिपदेनोपायमात्रमेव विवक्षितमिति चेन्न। अस्मदादिनैव सिद्धसाधनात्। अस्मदादीनां सकलकार्यकैश्चिदुपायाभिज्ञत्वात्। अपि च न परोक्षज्ञानादिमज्जन्यत्वं सकर्तृकत्वम्। यागस्य[1] भवदकर्तृकत्वापातात्। नहि तत्रापरोक्षज्ञानं चिकीर्षादिजनकं किंतु शाब्दम्। न च कर्तृत्वमेवास्ति, व्यवहारविरोधात्। ज्ञानमेव विवक्षितमिति चेदेवं हि किं ज्ञानमादाय साध्यपर्यवसानं स्यात्। न तावत्प्रत्यक्षं [2]नियामकाभावात्। नापरं तत् एव। न च[3] प्रत्यक्षादिविजातीयं ज्ञानपंचममेवेश्वरेऽङ्गीकार्यमपसिद्धान्तापातात्।

§११०. किंच प्रत्यक्षत्वादिजातीनां कारणविशेष्यप्रयोज्यतया कथं नित्ये वृत्तिसंभावनापि यावद्विशेषबाधात्[4] ज्ञानमपि सिध्येत्। एवमिच्छाप्रयत्नावपि। किं तत्कार्यत्वं कृतिजन्यत्वं वा, प्रागभावप्रतियोगित्वं वा, उत्पत्तिमत्त्वं वा, पूर्वकालासंबंधित्वे सत्युत्तरकालसंबंधित्वं वा। न तावदाद्यः पक्षः। स्वरूपासिद्धत्वात्। नापि द्वितीयः। ध्वंसेन व्यभिचारात्। नैव तृतीयोऽनिर्वचनात्। स्वसमानकालप्रतियोगिध्वंसानधिकरणसमयसंबन्ध उत्पत्तिरिति चेन्न। चरमध्वंसोत्पत्यव्यापनात्। तस्यापि चोत्पत्तिमत्तया सकर्तृकत्वाङ्गीकारात्। न चान्योन्यर्थविशेषणात्कथं वा कर्त्रा सहकारित्वस्य व्याप्तिरपि। कर्ता हि कारणविशेषः। कार्यत्वं च कार्य-

---

१. -या भवद ब। २. -क भावात् ब। ३. एव च ब।
४. विशेषाबाधात् अ।

मात्रवृत्तिसामान्यम्। न च तत्र कारणविशेषापेक्षा किंतु कारणत्वेन।

§१११. तथा च कार्यात्कारणमात्रमायाति न तु तद्विशेषः कर्तापि। न च सामान्येनापि रूपेण कर्ता तावत्सिद्ध इति वाच्यम्। सामान्यतो यत्किंचित् कारणमादायोपपत्तौ कर्तृत्वादर्शनात्। किं च घटि[1] कृति साध्येष्टसाधनताज्ञानं चिकीर्षाद्वारा हेतुः। तच्च न प्रत्यक्षत्वं चिकीर्षाविषयेनागतेन्द्रियस्य सामर्थ्यात्। किंत्वनुमितिरूपम्। तथा च साध्यविकलो दृष्टान्तः। साध्याप्रसिद्धिर्वा दोषः।

§११२. अथाशरीरसर्वज्ञनित्यज्ञानादिमान् कर्ता विवक्षितः। घटादौ च कार्यत्वस्य सशरीरासर्वज्ञानित्यज्ञानादिमत्कर्तृसहचारदर्शनात्। विशेषविरुद्धत्वमिति।

§११३. ननु ज्ञानत्वनित्यत्वयोः कर्तृत्वाशरीरत्वयोः परस्परविरुद्धत्वेनैकधर्मसमावेशात्कथं नित्यज्ञानादिमत्कर्तृसिद्धिः। किं च घटादौ कृतिसाध्यता हस्तादिद्वारैव गृहीता। न तु साक्षात्। न च पितृपुत्रयोरेकघटसाधनत्वमिव प्रयत्नहस्तादिव्यापारयोस्साक्षात्साधनत्वं वाच्यम्। घटार्थं हस्तादिव्यापारयोस्साक्षात्साधनत्वं वाच्यम्। घटार्थं हस्तादिना व्याप्रियमाणकुलालसमीपस्थस्य हस्तादिव्यापारशून्यस्यापि तत्र कर्तृतापत्तेः। न च हस्तादिव्यापारवत्ताशरीरस्य संभवति। अन्यादृशि[2] च साध्यता न दृष्टा शरीरतद्व्यापारौ [3]चाङ्कुरे बाधिताविति कर्तुरपि बाध एव।

१. घटि ब। २. अन्यादृशी ल। ३. चांतरे अ।

§११४. किंच कर्ता शरीर्येव, ज्ञानमनित्यमेव, बुद्धिरिच्छाद्वारैव, इच्छा कृतिद्वारैव हेतुरित्यादिप्राथमिकबहुव्याप्तिप्रत्यक्षविरोधान्नाशरीरनित्यज्ञानादिकर्तृसिद्धिः ।

§११५. ननु क्षित्यादिकर्ता सशरीरो वा अशरीरो वा । सशरीरश्चेत्तर्हि तच्छरीरं जन्यमजन्यं वा । 'जन्यं चेदीश्वरेण वा महेश्वरान्तरेण वा । यदीश्वरेण तदाशरीरेण वा सशरीरेण वा । सशरीरेण चेत्तर्हि तच्छरीरं जन्यमजन्यं वा'[१] इत्यादिविकल्पस्तदवस्थ एव । तथा चानवस्था । अशरीरेण चेन्न, विरोधात् । महेश्वरान्तरेण चेन्न, महेश्वरान्तरस्यानंगीकारात् । अंगीकारेण वा "**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो-बाहुरुतविश्वतः पात् । संबाहुभ्यां धमति[२] संपतत्रैर्द्यावाभूमी जनयन्देव एकः ।**" इत्येकत्वप्रतिपादकायाः श्रुतेरप्रमाण्यप्रसंगः । अथाजन्यं तदिति चेत् क्षित्यादेरप्यजन्यत्वं स्यात् ।

§११६. किंचेश्वरशरीरं व्यापकं वाव्यापकं वा । नाद्यम् । व्यापाराघटनात्[३] । व्यापारद्वारा शरीरस्य कारणत्वदर्शनात् । नापि द्वितीयः । देशान्तरे कार्यानुदयप्रसंगात् । तत्र व्यवहिते महेश्वरशरीरस्य[४] व्यापाराघटनात् । अथाशरीरश्चेन्न । अशरीरस्य कर्तृताऽघटनात्[५] ।

§११७. ननु कर्तृत्वमुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं न तु शरीरवत्त्वमपीति[६] चेत्तर्हि घटादावपि सशरीरस्य कारणता

---

१. अ प्रतौ ' ' अन्तर्गतः पाठो नास्ति । २. नमति ब ।
३. रघट० अ । ४. महेश्वरस्य ब । ५. कर्तृत्वा- ब ।
६. शरीरत्वं ब ।

न स्यादिति चेन्न । प्रत्यक्षबाधात् । न चान्वयव्यतिरेकाभ्यां घटादिकार्यं प्रति शरीरस्य कारणत्वं क्लृप्तम् । तथा तन्वादिकार्यं प्रत्यपि शरीरस्य कारणत्वमिति वाच्यम् दृष्टान्तदृष्टस्य यावद्धर्मस्य दार्ष्टान्तिकेऽसंभवात् । संभवे वा शब्दोऽनित्यः । कृतकत्वात् । घटवदिति । घटदृष्टान्त-बलाच्छब्देऽपि रूपत्वं सिध्येत् । न चैवम् । प्रतीतिविरो-धात् । तस्मादुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमानेव कारणं तन्वादौ न तु शरीरमपीति ।

§११८. अत्रोच्यते । रूपवत्वकृतकत्वयोर्व्याप्तेरभावान्न शब्दे रूप-वत्वं क्षित्यादौ तु शरीरजन्यत्वमपि स्यात् । यद्यत्कार्यं तत्तच्छरीरजन्यमिति व्याप्तिः । न च पक्षे व्यभिचार इति वाच्यम् । क्षित्यादेश्शरीरजन्यत्वेऽद्यापि विवादात् । न हि खलु वादस्थले व्यभिचारो दर्शनीयः, किन्तु तदतिरिक्ते । न चायं न्यायः शब्देऽपि समान इति वाच्यम् । पक्षातिरिक्ते फूत्कारादिवायौ व्यभिचारात् । ततस्तयोर्न व्याप्तिरिति वाच्यम् ।

§११९. न च चेष्टायां व्यभिचारात्तयोर्न व्याप्तिरिति वाच्यम् । चेष्टां प्रत्यपि शरीरस्य कारणत्वात् । चेष्टातिरिक्ते हि कार्ये व्यापारद्वारा शरीरस्य कारणत्वं चेष्टारूपकार्ये तु शरीरस्य साक्षात् कारणत्वं न तु व्यापारद्वारा, अनवस्थानात् । ततः पक्षातिरिक्ते अन्वयव्यतिरेकाभ्यां शरीरे कारणत्वस्य क्लृप्तत्वात् । प्रकृते क्षित्यादावपि शरीरं कारणमस्तु बाधकाभावात् ।

§१२०. अथ महेशस्य शरीरकल्पने गौरवमेव बाधकमिति चेत्तर्हि लाघवात्कृतिमज्जन्यमिति स्यात् । न चापरोक्षज्ञानचिकी-

र्षाभ्यां विना कृतेरनुत्पत्तिरिति वाच्यम् । महेश्वरकृतेर्नित्य त्वेनाभिमतत्वात् ।

§१२१. ननु उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्वं कर्तृत्वं न केवलं कृतिमत्वं कर्तृत्वमिति यदि तदा शरीरोपादानगोचरा-परोक्षज्ञानचिकीर्षाकृतिमत्वं कर्तृत्वं किं न स्यात् । घटादौ तादृशकर्तृत्वस्य दर्शनात् ।

§१२२. किंच क्षित्यादिकं न कर्तृजन्यं शरीराजन्यत्वात्, गगनवत् । तथा च नेश्वरः कर्ता, अशरीरत्वात् । मुक्तात्मवदिति चेन्न । सिद्ध(द्ध्य)सिद्धिभ्यां व्याघातात् । अथ परोक्षया परेष्ट्या सिद्धो भगवान्निषिध्यते, इति चेत्तर्हि परेष्टिः किं प्रमाणम-प्रमाणं वा । यदि प्रमाणं तर्हि तया बाध्यत्वादनुत्थानं विपरीतानुमानस्य । अथाप्रमाणं, प्रमाणं विना प्रमेयस्या-सिद्धिः । किमनेनोपन्यासेन । अथ प्रमाणं परेष्टिः । तेन विषयीकृतस्य महेश्वरस्य निषेधः संभवति । शुक्तिरूप्यस्य निषेधो यथा ।

§१२३. किंचेश्वरः प्रयोजनं विना कथं प्रवर्तते सुखस्याभावात् । [1]धर्माधर्माभावेन निर्दुःखत्वात् । करुणतया प्रवर्तत इति चेत्तर्हि परसुख[2]दुःखप्रापणप्रहाणे प्रयोजने । तथा च स्वर्गिण-मेव सृजेत् ।

§१२४. धर्माधर्मपरतन्त्रत्वात् तदनुरूपफलं प्रापयति इति चेत्तर्ह्या-वश्यकत्वात्कर्मनिर्मितमेव जगद्वैचित्र्यमस्तु किमीश्वरेण ।

१. धर्माभावेन ब । २. परदुःख० अ ।

कर्मनिरपेक्षत्वे च सर्गप्रलयौ सदा स्यातां ज्ञानादीनां नित्यत्वात् । ततो न कर्तृत्वं परमेश्वरस्य ।

§१२५. तथा न तस्य सर्वज्ञत्वमपि । तथाहि—परमेश्वरस्सर्वज्ञो न भवति । चिकीर्षादिमत्वात् [1]पृथ्वीश्वरवत् ।

§१२६. अथ सर्वज्ञः कोऽसाविति चेत् । कश्चित् पुरुषः सकलपदार्थ-साक्षात्कारी तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबंध-[2]प्रत्ययत्वात् । यस्सकलपदार्थसाक्षात्कारी न भवति तद्ग्रहण-स्वभावत्वे सति प्रक्षीणप्रतिबंधप्रत्ययो न भवति । यथा-स्मदादिरित्यनुमानात्सिद्धो यस्स सर्वज्ञो नान्यः परमेश्व-रादिः । यद्वा परमाण्वादयोऽतींद्रियार्थाः कस्यचित् सामान्य-प्रत्यासत्यजन्ययोगजधर्माजन्यजन्यप्रत्यक्षज्ञानविषयाः अनु-मितिविषयत्वादस्मदादिवदित्यनुमानात् सर्वज्ञसिद्धिरिति सर्वं समंजसम् ।

श्रीशांतिवर्णिविरचितायां प्रमेयकण्ठिकायां पंचमस्तबकः ।

१. पृथ्वीशरीरवत् अ । २. प्रत्ययसत्त्वात् अ । ३. ति न तद्ग्रहण ब । ४. -दनलवद अ ।

प्रमेयकण्ठिका जीयात्प्रसिद्धानेकसद्गुणा ।
लसन्मार्तण्डसाम्राज्ययौवराज्यस्य कंठिका ॥

[1]सन्तीष्कलंकं ( ? ) जनयन्ति तर्के भाभाति तर्को मम तर्करत्ने[1] ।
[2]तेनानिशं ब्रह्मकृतः कलंकश्चंद्रस्य किं भूषणकारणं न ॥
अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञान[3]सदृशं शुद्धवस्तुजम् ॥
ततः परं पुनर्वस्तुधर्मो जात्यादिभिर्यया[4] ।
बुद्ध्यावसीयते[5] सापि प्रत्यक्षत्वेन संमता ॥

प्रमेयकण्ठिका समाप्ता ।



१. संतिष्कलंकं जनयंतु बाबाधितर्को मम तर्करत्ने अ ।
२. केनानिशम् अ । ३. विज्ञाने ब । ४. मयो ब ।
५. ब प्रति में इसके बाद का श्लोकांश नहीं है ।

# प्रमेयकण्ठिका-शब्दानुक्रम